वस्तुतः यह दैवी वाणी असमर्थ वक्ताओं के द्वारा अपभ्रंशों से मिश्रित कर दी गई, यह वैयाकरणों का मत है। साधुशब्दों को धर्म का साधन न मानने वाले अनित्यदर्शियों की बुद्धि तो इस मत के विपरीत है।

**वृत्तिः**—श्रूयते पुराकल्पे स्वशरीरज्योतिषां मनुष्याणां यथैवानृतादिभिरसङ्कीर्णा वागासीत् तथा सर्वैरपभ्रंशैः। सा तु सङ्कीर्यमाणा पूर्वदोषाभ्यासभावनानुषङ्गात् कालेन प्रकृतिरिव तेषां प्रयोक्तॄणां रूढिमुपागता। अनित्यवादिनस्तु ये साधूनां धर्महेतुत्वं न प्रतिपद्यन्ते, मल्लसमयादिसदृशीं साधुव्यवस्थां मन्यन्ते, ते 'प्रकृतौ भवं प्राकृतं' साधूनां शब्दानां समूहमाचक्षते। विकारस्तु पश्चाद्व्यवस्थापितः, यः सम्भिन्नबुद्धिभिः पुरुषैः स्वरसंस्कारादिभिर्निर्णीयत इति ॥ १४५ ॥

विवरण—सुना जाता है कि आदिसृष्टि के समय मनुष्य अपने शरीर से उत्थित प्रभा के द्वारा ही प्रकाशित होते थे, आदित्य आदिक से नहीं। उस समय उनकी वाणी जैसे असत्य आदि से सङ्कीर्ण ( मिश्रित ) नहीं थी, वैसे ही समग्र अपभ्रंशों से रहित थी। कालान्तर में दैवी वाक् अपभ्रंशों से संकीर्ण होती हुई आलस्य-प्रमादादि पूर्व दोषों के अभ्यास ( बारम्बार घटित होने ) की भावना या दृढता के सम्बन्ध से उन बोलने वालों के बीच प्रकृति के समान रूढ हो गई। अनित्यवादी लोग जो साधु शब्दों को धर्म का हेतु नहीं मानते और साधुशब्द-व्यवस्था को दो मल्लों (पहलवानों) के बीच नियत की गई शर्त के समान स्वीकार करते हैं, वे प्रकृति अर्थात् स्वाभाविक अपभ्रंश रूप प्रकृति में जन्य होने से साधुशब्द समूह को प्राकृत कहते हैं। अपभ्रंश रूप प्रकृति पहले थी और विकार रूप संस्कृत पश्चात् व्यवस्थित की गई, जिसका निर्णय सम्यग् भेद विशिष्ट बुद्धि वाले पुरुषों द्वारा स्वर एवं संस्कार के आधार पर किया जाता है।

उक्त कारिका की वृत्ति कुछ अव्यवस्थित प्रतीत होती है। वृत्तिगत 'स्वशरीर' के स्थान पर 'खशरीर' पाठ भी मिलता है। श्रीवृषभ के आधार पर 'स्वशरीर'[1] पाठ ही उचित जान पड़ता है। 'प्रकृतिरिव' के स्थान पर 'प्रकृतिरेव' पाठ भी देखा जाता है। पद्धति में भी 'प्रकृतिरेवेति' यह पाठान्तर उपलब्ध होता है, किन्तु 'यथा कायवाङ्मनसां दोषाः—' इस व्याख्यान से 'प्रकृतिरिव' पाठ अधिक सङ्गत जान पड़ता है। 'सम्भिन्नबुद्धिभिः' पर श्रीवृषभाचार्य कहते हैं—'गम्यागम्यवाच्यावाच्यादिषु सम्भिन्नबुद्धिभिः, नास्तिकैरिति यावत्।'

किन्तु नास्तिक या अपभ्रंश को ही मूल मानने वाले लोग स्वर-संस्कारादि से विकार ( संस्कृत ) का निर्णय करते हैं—यह बात जँचती नहीं ॥ १४५ ॥

---

१. इसका पोषक एक वचन मनुस्मृति २।२३२ में मिलता है—'दीप्यमानः स्ववपुषा देववद्दिवि मोदते।'

साधु और असाधु दोनों प्रकार के शब्द अविच्छिन्न रूप से चले आ रहे है, अब इस मत का निरूपण करते हैं—

**उभयेषामप्यविच्छेदादन्यशब्दविवक्षया ।**
**योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः ।। १४६ ।।**

उभयेषाम् अपि अविच्छेदात्, अन्यशब्दविवक्षया यः अन्यः शब्दः प्रयुज्यते, सः अर्थस्य अभिधायकः न ( भवति )।

साधु और अपभ्रंश दोनों प्रकार के शब्द अविच्छिन्न रूप से चले आ रहे हैं; इस लिए अन्य शब्द की विवक्षा से यदि अन्य शब्द का प्रयोग किया जाता है तो वह अर्थ का बोधक नहीं होता।

**वृत्तिः**—येषामपि च नैव पुराकल्पो न च दैवी वागसङ्कीर्णा कदाचिदासीत् तेषामपि गम्यागम्यादिव्यवस्थावदियं साध्वसाधुव्यवस्था नित्यमविच्छेदेन शिष्टैः स्मर्यते। तत्रान्यशब्दविवक्षया बालप्रलापवदर्थेषु प्रयुज्यमानो यः शब्दो रूढः, यश्च न रूढः, तावुभावप्यर्थस्य न वाचकौ भवतः। तत्र तु साधुव्यवहिता वा भवत्यर्थप्रतिपत्तिरभ्यासाद् वा प्रमत्तानामक्षिनिकोचादिवत् सम्प्रत्ययमात्रं जायते ।। १४६ ।।

**इति महावैयाकरण-श्रीहरिवृषभविरचिते वाक्यपदीये आगमसमुच्चयो नाम ब्रह्मकाण्डं समाप्तम् ।।**

विवरण—जिनके मत में न तो कोई पुराकल्प था और न असङ्कीर्ण ( शुद्ध ) दैवी वाक् ही, उनके मत में भी गम्या और अगम्या—विवाह करने के योग्य और अयोग्य कन्या के समान साधु और असाधु शब्दों की व्यवस्था सर्वदा अविच्छिन्न रूप से शिष्टों द्वारा स्मरण की जाती या निबद्ध की जाती रही है। बालभाषित के समान अन्य शब्द की विवक्षा से विभिन्न अर्थों में प्रयोग किया जाने वाला शब्द जो रूढ़ हो चुका है अथवा जो रूढ नहीं हुआ, वे दोनों भी अर्थ के बोधक नहीं होते। वहाँ साधुशब्द के व्यवधान से ही ( साधुशब्द के स्मरणपूर्वक ) अर्थ की उपलब्धि होती है अथवा प्रमाद से युक्त पुरुषों को अभ्यास के कारण अक्षिसंकोचादि से सम्पन्न ज्ञान के समान असाधु शब्दों से अर्थ की प्रतीति मात्र उत्पन्न होती है ।। १४६ ।।

# कारिकानुक्रमणिका

# ग्रन्थकार-परिचयः

गङ्गाया गरिमाणं मौलिमुकुटसङ्घटितगिरिश्रेष्ठम् ।
गुरुणादरेण बिभ्रद्विलसत्यत्रोत्तरो देशः ॥ १ ॥

यत्रास्ते बैसवारावनिरखिलगुणखनिर्या जनिर्जित्वराणा-
माराद्धाराप्रसाराभिगतशतमहारातिमारान्तकानाम् ।
श्रीवेनीमाधवानां विसरदसिलतोद्यद्यशःसौरभाणां,
जृम्भन्तेऽद्यापि येषां रणरमणकथाश्चारु-रानाभिधानाम् ॥ २ ॥

यस्याङ्के शोभते ग्रामः श्रीसुमेरुपुराभिधः ।
पूर्वाञ्चले सदानीरा भाति लोननदी मुदा ॥ ३ ॥
दक्षिणस्यां च खरही पलाशवनसंवृता ।
प्रतीच्यां वहती चैव वर्षासून्मदकलेवरा ॥ ४ ॥
वशिष्ठस्य गणे जात उपमन्युर्महायशाः ।
गोत्रप्रवर्तकः कश्चिदासीच्छैवोत्तमो महान् ॥ ५ ॥
वशिष्ठ इन्द्रप्रमदो महर्षिश्च भरद्वसुः ।
अस्यैते पूर्वजा आसन् प्रवरा ऋषयस्त्रयः ॥ ६ ॥
तस्योपमन्योर्महतो गोत्रे जातो नरर्षभः ।
आसीत् प्रभाकरः श्रीमानस्माकं कोऽपि पूर्वजः ॥ ७ ॥
यद्विषये वंशजस्यैव कस्यचित्सूक्तिरीर्यते—

'न दक्षिणाशाप्यवलम्बिता क्वचित्
कृतोऽमुना नैव कदाप्यधः करः ।
तथापि लक्ष्मीं सुहृदे समर्पयन्
प्रभाकरोऽभूदपरः प्रभाकरः ॥'

तस्यावस्थीत्यन्ववायः प्रसिद्धो,
विद्यावृद्धः कान्यकुब्जद्विजेषु ।
उन्नावाख्ये मण्डले ग्राम उक्ते,
तस्मिन्वंशे सम्प्रसूतोऽहमस्मि ॥ ८ ॥

चन्द्रमती यस्याम्बा रामकुमारो भिषग्वरस्तातः ।
आवसथिककुलशैलः सततं प्रभाकरो जयति ॥ ९ ॥

साहित्ये कृतधीरधीतिनिपुणैरन्तेवसद्भिः सदा ।
संवीतो नवनीतिकौशलजुषी यस्याभवच्छेमुषी ॥
गीतागानचणः पितृव्यचरणो जैरामसंज्ञः सुधीः ।
वैदुष्यं हि वितीर्य मे सुरगिरो मामञ्जसान्वग्रहीत् ॥ १० ॥
श्रुत्यन्ते प्रथिता मतिः स्मृतिपुराणादौ च पूर्णा गति-
र्यस्याभूद्रघुवंश इत्यभिधया ख्यातः पितृव्यो गुरुः ।
संसत्सु प्रतिवादिवृन्दविभदीकारप्रकारे पटु-
र्मुम्बाया नगरे वसञ्शुचिधिया लेभेऽवदातं यशः ॥ ११ ॥
अष्टाध्यायी हि यस्याः स्मृतिसरणिमिता या क्रमव्युत्क्रमेण,
तस्या अङ्के स्वतातस्वसुरखिलमहो शैशवं येन नीतम् ।
कौमुद्याः फक्किकासु प्रणिहितहृदयः शेखरप्रोतचित्तः ।
ब्रह्मानन्दाभिधानः गुरुरपर इहाऽभूद्यस्य धन्यो पितृव्यः ॥ १२ ॥
सूर्यनारायणः शुक्लो वाराणस्यां गुरुर्मम ।
आसीज्ज्ञानरुचौ सूर्यनारायण इवापरः ॥ १३ ॥
नित्यं रसात्रसेकाज्जीवनधारां प्रपूरयन्ती या ।
श्रीरिव गेहे कलिता सा मे ललिता सती भाति ॥ १४ ॥
तत्तिग्मांशोर्दहरकुहरे चेतसालम्ब्य बिम्बं
तत्राम्बाया विरचितवता चारु पञ्चोपचारम् ।
नित्यं सक्तेन हि जपविधौ भूयसा वेदमातु-
रन्तर्यागप्रकटविधिनोत्थापिता नागकन्या ॥ १५ ॥
सिन्दूरारुणतरुणीं तरणीं भवजालजलधिहरीणाम् ।
करुणावीक्षणनिपुणामम्बामविलम्बमालम्बे ॥ १६ ॥

## विषयानुकूल ग्रन्थरत्नानि

- **(बृहत्) अनुवाद रत्नाकर** । डॉ० रमाकान्त त्रिपाठी
- **अष्टाध्यायी** । 'चन्द्रलेखा' हिन्दी व्याख्या एवं अनेकोपयोगी विषययुक्त । पं० ईश्वरचन्द्रशर्मा । १-२ भाग
- **अष्टाध्यायी** । 'शान्ति' संस्कृत-हिन्दी टीका सहित । डॉ० नरेश झा
- **काशिका** । विस्तृत हिन्दी व्याख्या सहित । पं० ईश्वरचन्द्र शर्मा
- **कृत्प्रत्ययविश्लेषण** । कृत्प्रत्ययों का व्यापक तथा विशद् विश्लेषण । डॉ० गोपबन्धु मिश्र
- **परमलघुमञ्जूषा** । संस्कृत-हिन्दी व्याख्या सहित । पं० वंशीधर मिश्र
- **परिभाषेन्दुशेखर** । तात्याशास्त्रीकृत 'भूति' टीका सहित
- **परिभाषेन्दुशेखर** । 'सुबोधिनी' हिन्दी व्याख्या सहित । आचार्य विश्वनाथ मिश्र
- **पाणिनीयशिक्षा** । 'वेदाङ्गशिक्षाविमर्श' संस्कृत एवं 'नारायणी' हिन्दी व्याख्या एवं परिशिष्ट सहित
- **प्रबन्धरत्नाकर** । (शास्त्री, आचार्य, बी.ए., एम.ए. आदि परीक्षोपयोगि शताधिक निबन्धों का संग्रह) । डॉ० रमेश चन्द्र शुक्ल
- **प्रौढमनोरमा** । (कारकादव्ययीभावान्तोभाग) सशब्दरत्न बालप्रकाशिका संस्कृत-हिन्दी व्याख्या सहित । डॉ० रमाकान्तपाण्डेय
- **प्रौढमनोरमा** (पञ्चसन्ध्यन्त) । 'शब्दरत्न', 'भैरवी' एवं हिन्दीव्याख्या सहित । डॉ० रमाकान्त पाण्डेय
- **बृहद्धातुशब्दरूपसंग्रह** । डॉ० रामकिशोरशर्मा
- **बृहद्धातुसुकुमाकर** । (सिद्धान्तकौमुदी के सभी धातु-रूपों का संग्रह) । पं० हरेकान्तमिश्र
- **बृहच्छब्दकुसुमाकर** । (शब्दरूपों का संग्रह) । पं० हरेकान्त मिश्र
- **मुग्धबोधव्याकरण** । बोपदेवविरचित । श्रीदुर्गादासतर्कवागीश, श्रीरामतर्कवागीशकृत टीका सहित । सम्पा. पं० जीवानन्दविद्यासागर
- **लघुशब्देन्दुशेखर** । 'भैरवी', 'चन्द्रकला' एवं 'बैकुण्ठी' हिन्दी टीका सहित । बैकुण्ठनाथ शास्त्री
- **लघुसिद्धान्तकौमुदी** । विवेचनात्मक 'माहेश्वरी' हिन्दी व्याख्या सहित । डॉ० महेशसिंहकुशवाहा । १-२ भाग

P.B.



**चौखम्बा विद्याभवन**
**वाराणसी**

KP Press